१२५–विशिखान्तराण्यतिपपात सपदि जवनं स वाजिभि ।
द्रष्टुमलघुरभसापतिता वनिताश्चकार न सकामचेतस ॥१५-३०

विशिखान्तराण्यति वाक्यार्थहेतुक काव्यलिगमत्र ।

१२६–रणर्मंमदोदयविकासिवल कलकलाकुलीकृते ।
शारिमशकदविरोपयितुं द्विरदे मदच्युनि जन कथचन ॥१५-७७

अत्र मदहेतुत्वात् शारिदुरारोपत्वहेतुत्वाच्च काव्यलिगद्वयम् ।

१२७–परितश्च धौतनुत्वत्नमविलसदहिमांशुमण्डलाः ।
तेनुरतनुवपुष पृथिवी स्फुटलक्ष्यतेजस इनात्मजा श्रिय. ॥१५-७८

स्फुटलक्ष्यतेजस्कत्व प्रति धौतेत्यादिपदार्थहेतुक काव्यलिगम् ।

१२८–दयिताय मासवमुदस्तमपतदवमादिनः करात् ।
कास्यमुपहितत्तरोनपतदभ्रमरोघमारगुरु राजयोषित ॥१५-८१

अत्रावसादभारगौरवयो. कास्यपात्रपातहेतुत्वात्काव्यलिगम् ।

१२९–न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी ।
यातमवनिमवसन्नभुजाग्र गलद्विवेद वलय विलासिनी ॥१५-८५

अत्रावमादस्य विशेषणगत्या वलयपातहेतुत्वात्काव्यलिगम् ।

१३०–समरान्मुखे नृपगणेऽपि तदनुमरणोद्यतैर्वधो. ।
दीनपरिजनकृताश्रुजलो न भटोजनः स्थिरमना विचक्लमे ॥१५-९३

अत्र मरणोद्योगस्य विशेषणगत्यावैन्यहेतुत्वात् काव्यलिगम् ।

१३१–सम्प्रत्युपेया. कुशली पुनर्युधः सस्नेहमाशीरिति भर्तुरीरिता ।
सद्य प्रसह्य द्विसयेन नेत्रयो. प्रत्याचचक्षे गलता मटस्त्रिया ॥१५-९७

अत्राश्रुपातस्य नेत्रविशेषणद्वारा आशी· प्रत्याख्याने हेतौ काव्यलिगम् ।

१३२- काचित्कीर्णा रजोभिर्दिवमनुविदधे भिन्नवक्त्रेन्दुलक्ष्मी-
रश्रीका काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्या प्रतिपदमपरा भूमिवत्कम्पमापु
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसु ॥१५-९६

अत्र नारीणां रजादाहादिवाक्यार्थहेतुकं काव्यलिंगम् ।

१३३-त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिप. ।
प्रियमासमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ॥१६ ४५

अत्रोज्झन प्रति प्रियमासपदस्यार्थो हेतुरिति पदार्थहेतुक काव्यलिंगम् ।

१३४-अहित प्रधनाय माधवानहमाकारयितुं महीभृता ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥१६-५२

छलादपकुर्वन्तीति वाक्यार्थहेतुकं काव्यलिंगम् ।

१३५-परिपाति स केवलं शिशूनिति तन्नामनि मा स्म विश्वसी. ।
तरुणानपि रक्षति क्षमी स शरण्य. शरणागतान्द्विप. ॥१६-५४

अत्र यत शरण्यः अत रक्षतीति पदार्थहेतुक काव्यलिंगम् ।

१३६-विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्य शिशुपालतां यथार्थाम् ।
रुदतां भवदङ्गनागणानां करुणान्त.करणः करिष्यतेऽसौ ॥१६-८५

अत्र शिशुपालनहेतुत्वादनेकपदार्थहेतुक काव्यलिंगम् ।

१३७-प्रदुप्यतः श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनान्तमारुतैः ।
युधाजितः कृतपरिपूर्णवीजनं पुनस्तरां वदनसरोजमम्लिदत् ॥१७-६

अत्रोष्मविशेषणगत्या स्वेदहेतुत्वात्काव्यलिंगम् ।

१३८–जटीकृतश्रवणपथे दिदीवमा चमूरवे विनति सुगाद्रिकदरा ।
अनयैकरजनि विदग्धकामिनीरतान्तरक्वाणितविलासकौशलं ॥१७-३

अत्र श्रोत्रजाड्यस्य क्वणितानयंक्यहेतुत्वात् काव्यलिंगम् ।

१३९–अरातिभिर्युधि सहयुध्वनो हताश्छिन्नभुजव श्रुतरणतूर्यनि स्वना ।
अकुर्वत प्रथममनागमोचित चिरोज्झितं सुरगणिका प्रसाधनम् ॥१७-३

अत्र स्वयंवरणतूर्यश्रवणयो. प्रसाधनहेतुत्वात् काव्यलिंगम् ।

१४०–विपङ्क्तिभिर्दमितरेतरं क्वचित्तुरगमेरुपरि निरुद्धनिर्गमा ।
चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलय ॥१७-५३

अत्र निर्गमरोधेन विशेषणगत्या परिहारात्काव्यलिंगम् ।

१४१–निरीक्षितुं विमति समेत्य कौतुकात्तराजम ममग्मुमे महीभृताम् ।
रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणो पलाय्यत । १७ ६३

अत्र अनिमिषपदस्यार्थो हेतुरिति पदार्थहेतुकाव्यलिंगम् ।

१४२–समस्थलीकृतविवरेण पूरिता महीभृता बलरजसा महागुहाः ।
रहस्त्रपाविधुरवधूरतार्थिना नभ सदामुपकरणीयतां ययुः ॥१७-६६

अत्र रजःपूरणस्योपकारकहेतुत्वात्काव्यलिंगम् ।

१४३–मदाम्भसा परिगलितेन सप्तधा गजाम्बुन शमितरजश्चयानध ।
उपर्यवस्थितघनपांशुमण्डलानलोकयत्ततपटमण्डपानिव ॥१७-६८

अत्रोपरिविततपटमण्डत्वं प्रत्युपरीत्यादिपदस्यार्थो हेतुरिति काव्यलिंगम् ।

१४४–रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिना ह्रेषया च ।
व्योमव्यापी संतत दुन्दुभीनामव्यक्तोऽभूदीर्मितेव प्रणाद ॥१८-३

अत्रैक्यागमनस्य विशेषणमत्याव्यक्तहेतुत्वात् काव्यलिंगम् ।

१५२–वारा शिलारोहशून्यासनानां प्रकान्तानामन्यमन्यैर्ग्रहीतुम् ।
मंरब्धानां भ्राम्यतामाजिभूमौ वारी वारैः सस्मरे वारणानाम् ॥१८-५६

अत्र शून्यासनत्वादीनां वारीस्मरणहेतुत्वात् काव्यलिंगम् ।

१५३–कश्चिन्मूर्च्छामित्य गाढप्रहार सिक्तः शीतैः शीकरैर्वारणस्य ।
उच्छ्वास प्रस्थिता त जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्च्छ ॥१८-५८

अत्र नाकनारीमूर्च्छाहेतुत्वात् काव्यलिंगम् तच्चातिशयोक्तिसंकीर्णम् ।

१५४–त्यक्तप्राणं संयुगे हस्तिनीभ्या वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।
प्राप्याखण्ड देवभूय सतीत्वादासिश्लेष स्वैव कश्चित्पुरघ्नी ॥१८-६१

अत्र सतीत्वस्य विशेषणगतया देवभूयहेतुत्वात् काव्यलिंगम् ।

१५५–ओजो महौजाः कृत्वाधस्तात्क्षणादुत्तमौजसः ।
कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥१९-१६

अत्रोत्तमौजसः प्रति अध कृत्वेति पदार्थहेतुक काव्यलिंगम् ।

१५६–सोढुं तस्य द्विपो नालमपयोधरवारणम् ।
अरुणं नाद यश्च धामपयोधरवारणम् । १९-२१

उत्तरवाक्यस्य पूर्ववाक्येन हेतुत्वात् वाक्यार्थहेतुकं काव्यलिंगम् ।

१५७–दिवमिच्छन्युधा गन्तुं कोमलामलसंपदम् ।
दधौ दधानोऽसिलता कोऽमलामलस पदम् ॥१९-३१

अत्र स्वर्गेच्छया नि शकप्रस्थानहेतुत्वात् वाक्यार्थहेतुकाव्यलिंगम् ।

१५८–प्रभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।
चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥१९-३५

अत्राकर्षणस्य क्रन्दनहेतुत्वात्काव्यलिंगम् ।

१५६–न तस्थौ भर्तृ तः प्राप्तमानसंप्रतिपत्तिषु ।
रणकर्मसु भयं मानस प्रति पत्तिषु ॥१६-३८

अत्र मानसं प्रतिपत्योर्भयाऽनवस्थानहेतुत्वात् पदार्थहेतुकं काव्यलिंगम्।

१६०–द्विपद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।
भिक्षत्रासं रम्भया बभूवारुणविग्रह ॥१६-५३

अत्रारुणविग्रहभावहेतुत्वात्काव्यलिंगमुपमाऽनेपान्यांसंकीर्यते ।

१६१–यावन्न सत्कृतैर्भर्तुः स्नेहस्यानृण्यमिच्छामि ।
अमर्षादितरैस्तावत्तन्यजे युधि जीवितम् ॥१६-५७

सत्कारादिविशेषणोरथकाव्यलिंगम् ।

१६२–अयनोभिदुरालोके कोपधाम रणाहते ।
अयनोभिदुरा लोके कोपधा मरणाहते ॥१६-५८

अत्रायनोभिन्वादीनां जीवत्यागहेतुत्वात् काव्यलिंगं यमकेन संकीर्यते।

१६३–अनृग्जनोऽस्थक्षतिमानवमज्जवसादनम् ।
रक्षःपिशाच मुमुदे नवमज्जवसादनम् ॥१६-७८

अत्र मोदस्य वमनश्रावणार्थहेतुत्वाद् वाक्यार्थहेतुकं काव्यलिंगम् ।

१६४–वन्धौ विपन्ने ऽनेकेन नरेणेह तदन्तिके ।
अनोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥१६-८०

अत्र घण्टानामरणनहेतुत्वात् पदार्थहेतुकं काव्यलिंगम् ।

१६५–न केवलं जनैस्तस्य लघुसंधायिनो धनुः ।
मण्डलीकृतमेवान्तादवलमैक्षि द्विपामपि ॥१६-६७

अत्र मण्डलीकृतत्वं प्रति हेतुप्रतीयमानात् पदार्थहेतुकं काव्यलिंगम्।

१६६—अशितारामु विव्याध द्विषतः स तनूनिरणः।
दानेषु स्थूललक्ष्यत्वं न हि तस्य शरासने ॥ १९-९९

अत्राशितारावेवित्वमिति वाक्यार्थहेतुक काव्यलिंगम्।

१६७—मुक्तानेकशरं प्राणानहरद्भूपसा द्विषाम्।
तदीयं धनुरन्यस्य न हि मेहे सजीवताम् ॥१९-१०१

पूर्ववाक्येन वाक्यार्थहेतुकं काव्यलिंगमत्र हेतुकथनाद्।

१६८—मुखमुल्लसितत्रिरेखमुच्चैर्भिदुरभ्रूयुगभीषणं दधानः।
समिताविति विक्रमानमृष्यन्गतभीराह्वत चेदिराण्मुरारिम् ॥२०-१

अत्रामर्षस्य विशेषणगत्याह्वानहेतुत्वात्काव्यलिंगम्।

१६९—जनितानिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन्नृपेण।
चपलानिलचोद्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥२०-७

अत्रास्फालितमध्वनदिति पदार्थहेतुककाव्यलिंगस्य भेदः।

१७०—विहितादभुनलोकसृष्टिमाये जयमिच्छन्किल मायया मुरारौ।
भुवनक्षयकालयोगनिद्रे नृपतिः स्वापनमस्त्र माजहार ॥२०-३२

अत्र हरिविशेषणैस्तस्य दुर्जयत्वसिद्धेरिति हेतुकथनात् काव्यलिंगम्।

१७१—गुरवोऽपि निपद्य यन्निदद्रुर्धनुषि क्ष्मापतयो न वाच्यमेतत्।
क्षयितापदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निपण्णाः ॥२०-३४

अत्र धनुराश्रयवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिंगम्।

१७२—उचितस्वपनोऽपि नीरराशौ स्वबलाम्भोनिधिमध्यगस्तदानीम्।
भुवनत्रयकार्यजागरूकः स परं तत्र परः पुमानजागः ॥२०-३६

अत्र तात्विकजागरणहेतुकत्वाद्विरोधाभाससंकीर्णं काव्यलिंगम्।

१७३–अथ सूर्यरुचीव तस्य दृष्टावुदभूत्वे स्तुभदर्पण गतायाम् ।
पदु धाम ततो न चाद्भुत त द्विमुरिन्द्विकविलोचन. विलासी ॥२०-३७

अ- वाक्यार्थहेतुक काव्यलिंगमलकार: ।

१७४–प्रकृति प्रतिपादुकैरपादैरवलूपे मानुमत पुन प्रसत्तुम् ।
तमसोऽभिनवादपास्य मूर्च्छामुपजीवत्सहमेव जीवलोक ।।२० ३६

अत्रोज्जीवनस्यार्कस्य प्रसारहेतुत्वात् पदार्थहेतुक काव्यलिंगम् ।

१७५–गुरुनादविमुच्यदम्बुमुचा क्षणमालम्बनभृतानुताप्रभास ।
स्वमसारतया मयीभवन्त पुनराचारमवापुरम्बुवाहा ॥२०-६२

अत्र गुरुत्व प्रति विमुच्यदम्बुपदस्यार्थो हेतुरिति काव्यलिंगम् ।

# अनुमानम्

१–अनुवनमसितभ्रूव सखीभि सह पदवीमपर पुरोगतायाः ।
उरसि सरसरागपादलेखाप्रतिमतयानुययावसंशयानः ।।७ २२

पादन्यासचिह्नसदृशत्वादित्यनुमानादनुमानमलकारः ।

२–व्यक्त बलीयान्यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी ।
गाङ्गौघनिर्नम्मितसमुद्रधरानवर्णमर्णः कथमन्यथास्य तद् ॥१२-६६

विच्छित्तिवशाच्चानुमानमलंकार: ।

# यथासंख्यम्

१-विधृते दिवा सययमा च पुर. परिपूर्णमण्डलविकासभृति ।
हिमधाम्नि दर्पणतने च मुहु- स्वमुखश्रिय मृगदृशो ददृशु ॥९-५३

अत्र चन्द्रदर्पणयोर्युगवयमोश्च यथासंख्यमन्वयाद्यथासंख्यालंकार ।

२-अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ।
क्षालितं नु शमितं नु वधूना द्रावितं नु हृदयं मधुवारैः ॥१०-१४

अत्राप्रसन्नत्वाद्युद्देशिनां क्षालितत्वाद्यनुद्देशिभिर्यथासंख्यालंकार. ।

३-श्रीवतामुपगतास्वनुवेलं तासु गेयपरितोषवतीषु ।
अग्रहीन्नु सशरं धनुरज्झामास नूज्झितनिषङ्गमनङ्ग. ॥१०-३४

गेयपरितोषयोर्धनुर्ग्रहणाभ्यां यथासंख्येनान्वयाद्यथासंख्यालंकारः ।

४-अमनोहरमता ययौ जनस्य क्षणमालोकपथान्नभ. सदा सा ।
रुरचे पिहिताहिमद्युतिर्वोविनिरासैरन्तगिता च्युता धरित्री ॥२०-१५

जनस्य नभ सदां यथासंख्यान्वयाद्यथासंख्यालंकार ।

---

# पर्यायः

१-प्रथममलघुमौक्तिकाभमासीच्छ्रमजलमुज्ज्वलगण्डमण्डलेषु ।
कठिनकुचतटाग्रपाति पश्चादथ शतशर्करता जगाम तासाम् ॥७-६६

एकस्य श्रमजलस्य क्रमेणानेकाश्रयसम्बन्धनिबन्धनात् पर्यायालंकारः ।

१–राहुस्त्रीस्तनयोरकारि सहसा येनादलथालिङ्गन-
व्यापारैकविनोददुर्ललितयो. कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्रोशत एव तस्य मुरजित्तत्काललोलानल-
ज्वालापल्लवितेन मूर्धविकल चक्रेण चक्रे वपुः ॥२०-७८

चक्रवर्णनेऽप्रस्तुताद्राहुस्त्रीकुचकार्कश्यवर्णनात्पर्यायमलंकारः ।

---

# परिवृत्तिः

१–समुत्क्षिपन् यः पृथिवीभृता वरं वरप्रदानस्य चकार शूलिनः ।
) त्रसत्तुषाराद्रिसुतासमभ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम् ॥१-५०

अत्र शैलचलनेन सुखवरदानयोर्विनिमयाद्विषमपरिवृत्तिरलंकारः ।

२–यां चन्द्रकैर्मदजलस्य महानदीना
नेत्रश्रियं विकमतो विदधुर्गजेन्द्राः ।
ता प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥५-४०

अत्र गजाना नदीनाञ्च समेनोक्त्या समपरिवृत्तिलंकारः ।

३–रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्याग्रन्तर्मार्पितैः स्थावराणि ।
केचिद्गुर्वैमिरिय संपरायमिषचा क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥१८-१५

अत्र न्यूनं प्राणैस्तैरधिकयशः परिवर्तान्न्यूनपरिवृत्तिरलंकारः ।

# परिसंख्याः

१-यद्वानुदेवेनादीनमनादीनवमोरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥२-२२

अत्र सपदि क्रियैवोत्तरमिति आर्थीपरिसंख्यालंकारः।

२-प्रीतिरस्य ददतोऽभवत्तथा येन तत्प्रियचिकीर्षवो नृपाः।
स्पर्शितैरधिकमागमन्मुदं नाधिवेश्म निहितैरसायनैः ॥१४-४१

दानसंग्रहयो- प्रकृतयोः प्रीते संग्रहपरिहारेण शुद्धपरिसंख्यालंकारः।

३-दर्शनानुपदमेव कामतः स्वं वनीपकजनैरधिगच्छति।
प्रार्थनार्थरहितं तदाभवद्दीयतामिति वचोऽर्थसर्जने ॥१४-४८

प्रतिसर्जनार्थकथनादेकस्यानेकत्वप्रसक्तात् शुद्धा परिसंख्या।

४-आत्मनैव गुणदोषकोविदः किं न वेत्सि करणीयवस्तुषु।
यत्तथापि न गुरून्न पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम् ॥१४-५४

अत्र कर्तव्यार्थप्रश्नस्याज्ञानहेतुकत्वमिति प्रश्नपूर्विका परिसंख्या।

५-अत्र चैष सकलेऽपि भाति मा प्रत्यशेषगुणबन्धुरर्हति।
भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः ॥१४-५८

अत्रान्येषु पूजायां हरिर्भातीति व्यपोह्यमानात् शाब्दी परिसंख्या।

---

# अर्थापत्तिः

१–अनन्यगुर्व्यास्तव केन केवल पुराणमूर्तेर्महिमाऽवगम्यते ।
मनुष्यजन्माऽपि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥१-३५

अत्राप्राकरणिकार्थात् इति प्रकृतेरर्थस्यापतनादर्थापत्तिः ।

२–लघूकरिष्यन्नतिभारभङ्गुरामम् किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरा त्वया ॥१-३६

अत्र दृश पदं कथं स्यादितिनेत्यर्थान्तरापतनादर्थापत्तिरलङ्कारः ।

३–उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥१-३८

अत्र क्षमेत् कः इति नेत्यर्थान्तरपतनादर्थापत्तिः ।

४–मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ।२-४३

अत्र क्षमत क इति नेत्यप्राकरणिकस्यार्थस्यापतनादर्थापत्तिः ।

५–आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्निस्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ।४-१९

भवतोऽपि विस्मितत्वं सम्भवतीति अप्रकृतार्थस्यापतनादर्थापत्तिः ।

६–यदेतदस्यानुतटं विभाति वनं ततानेकतमालतालम् ।
न पुष्पितात्र स्थगितार्करश्मावनन्तताने कतमा लताऽन्यम् ॥४-३९

अत्र सर्वापि लता पुष्पितेति अर्थापतनादर्थापत्तिः ।

७–या बिभर्ति कलवल्लकीगुणस्वानमानमतिकालिमालया ।
नात्र कान्तमुपगीतया तया स्वानमानमति काऽलिमालया ॥४-५७

अत्र सर्वापि नमतीति अर्थस्यापतनादर्थापत्ति ।

८–निर्धूतवीतमपि बालकमुल्ललन्त
यन्ता क्रमेण परिसान्त्वनतर्जनाभि ।
शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रे हि निश्चितधिया क्व न सिद्धिमेति ॥५-४७

अत्र प्राकरणिकार्थादप्राकरणिकस्यार्थस्यापतनादर्थापत्ति ।

९–कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ।
मरणमप्यपरा प्रतिपेदिरे किमु मुहुर्मुहुर्गतभर्तृकाः ॥६-१६

अप्रकृतार्थादप्रकृताभरणमित्यर्थस्यापतनादर्थापत्ति ।

१०–विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति ।
अभिहितेऽलिभिरेवमिवोच्चकैर्ननृते ननृते नवपल्लवैः ॥६-३९

न कश्चलतीति प्रस्तुतस्यार्थादप्रस्तुतस्य नेत्यर्थस्यापतनादर्थापत्ति ।

११–शिशिरमासमपास्य गुणोऽस्य न क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुष परिरेभिरे घनमतो नमनोऽनुमतान् प्रिया. ॥६-६५

अत्र को गुणः अपि तु कोऽपि नेत्यर्थान्तरापतनादर्थापत्तिः ।

१२–मुहुरिति वनविभ्रमाभिषङ्गादतमि तदा नितरां नितम्बिनीभि ।
मृदुतरतनवोऽलसा प्रकृत्या चिरमपि ता किमुत प्रयासभाजः ॥७-६८

अत्राप्रकृतनैसर्गिकालस्य कथनेनागन्तुकस्य वर्णनादर्थापत्ति ।

१३–आस्माकी युवतिदृशामसौ तनोति
छायैव श्रियमनपायिनीं किमेभिः ।
मत्वैवं स्वगुणपिधानसाभ्यसूयै
पानीयैरिति विदधाविरेऽञ्जनानि ॥८-५०

श्रियमनपायिनीं किमेभिरित्यप्रस्तुतार्थापतनादर्थापत्तिः ।

१४–दयिताय मानपरयाऽपरया त्वरितं ययावगदितापि सखी ।
किमु चोदिताः प्रियहितार्थकृतः कृतिनो भवन्ति सुहृदः सुहृदाम् ।९-५७

अत्र किमुशब्देनाप्राकरणिकार्थस्यापतनादर्थापत्तिः ।

१५–दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् ।
यत्सुवर्णमुकुटांशुभिरामोच्चेतनाविरहितैरपि पीतम् ॥१०-६

यदचेतनानामपिपेयमित्यर्थस्यापतनादर्थापत्तिः ।

१६–रटतापि चैद्यवचनेन विकृतिमगमन्न माधवः ।
सत्यनियतवचसं वचसा सुजनं जनाश्चलयितुं क ईशते ॥१५-४०

क ईशते इत्यप्राकरणिकार्थादप्राकरणिकार्थस्यापतनादर्थापत्तिः ।

१७–निहतोन्मददुष्टकुञ्जराद्दधतो भूरि यशः क्रमार्जितम् ।
न बिभेति रणे हरेरपि क्षितिपः का गणनाऽस्य वृष्णिषु ॥१६-५६

न बिभेतीति कथनाद् प्रकृतस्यार्थस्यापतनादर्थापत्तिः ।

# समुच्चयः

१–मुदमब्दभुवामपां मयूराः सहमायन्त नदीपपाटलाभे ।
अलिना रमतालिनी शिलीन्ध्रे महसयन्तनदीपपाटलाभे ॥६-७२

मयूरमोदप्राप्त्याद्यनेककर्तृकक्रियायौगपद्याद्भिन्नाधिकरणक्रिया-समुच्चयरूपः समुच्चयालङ्कारः ।

२–प्रागुरासु हवनीयमन्न यत्तेन दीर्घममरत्वमध्यगु ।
उद्धतानविक्रमैधितौजसो दानवाश्च विबुधा विजिग्यिरे ॥१४-३१

चामरत्वासुरविजयक्रियासमुच्चय इति गुणक्रियायौगपद्यात् समुच्चय ।

३–हरिमप्यमंस्त तृणाय कुरुपतिमजीगणन्न वा ।
मानतुलितभुवनत्रितयाः सरितः सुतादविभयुर्न भूभृतः ॥१५-६१

राजसु हयवमानाद्यनेकक्रियायौगपद्यात् समुच्चय. ।

४-ग्लानिच्छेदी क्षुत्प्रबोधायो पीत्वा रक्तारिष्टं शोषिताजीर्णशेषम् ।
स्वादुंकारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद्व्यस्वनच्च ॥१८-७७

व्यस्वनद्वादयश्चेत्यनेकक्रियायौगपद्यात् समुच्चयः ।

---

# समाधिः

१-विगतसस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम् ।
श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रत. ॥६-४९

दण्डसाध्ये मृगनिवारणे काकतालीयन्यायेन मुख्यार्थस्य गानस्य कारणत्वकथनात् समाधिरलंकारः ।

२–प्रागनानगरीरत्नप्रतियातान् वल्लभानभिनिसारयिपूणाम् ।
प्राप चेतसि सविप्रतिसारे मुख्य वामवसर सरवेग ॥१० २०

अभिसारगुस्य पश्चात्तापकरणस्य मदयोगात्तीव्रोक्ते समाघ्यलंकार. ।

---

# प्रत्यनीकम्

१ मम स्वकीनिमहरद्भुवि यस्तदनु प्रनकहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदय सुनरां क्षिणोति न्वनु ता मदन ॥९-६३

अत्र साक्षात्प्रतिपक्षभूतनायकपीडासमर्थस्य मदनस्य तदीयनायिका-
पीडनोक्त्या प्रत्यनीकालंकार ।

२–यस्य किंचिदपकर्तुमक्षम. कायनिग्रहगृहीतविग्रह ।
कान्तवक्त्रसदृशाकृति कृती राहुरिन्दुमधुनापि बाधते ॥१४-७८

अत्र साक्षात्प्रतिपक्षहरिनिग्रहाशक्तया राहोस्तदीयेन्दुनिग्रहोक्त्या
प्रत्यनीकालंकार. ।

---

# प्रतीपम्

१–अननुरञ्जितनायकचित्तक शरद प्राप्य विमण्डितायुधा ।
दधतरंगिणिरस्म सुन्दना यदि नाभारहृत पयोभृत ॥१६ ६१

अत्र पयोभृतामुपमानानामुपमेयभावोक्ते प्रतीपालंकारः ।

## मीलितम्

१-अरमयन् भवनादचिरद्युतेः किल भयादवयातुमनिच्छव ।
यदुनरेन्द्रगणं तरुणीगणास्तमथ मन्मथमन्थरभाषिणः ॥६-४०

अत्राचिरद्युतेर्भयेन रागनिगूहनात्सहजलक्ष्ममीलनालंकारः ।

२-पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वं किलाधरमुपालि ररञ्ज ॥१०-२६

अत्रागन्तुना रञ्जनेन सहजचुम्बननिगूहनादागन्तुकलक्ष्ममीलनालंकारः ।

३-मन्द्रैर्गजाना रथमण्डलस्वनैर्निजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्बभूवे परभागलाभतः परिस्फुटैस्तेषु तुरगहेषितैः ॥१२-१५

अत्र मन्द्रैरथमण्डलस्वनैस्तादृशगजबृंहितगोपनादागन्तुकलक्ष्ममीलितालंकारः ।

---

## सामान्यम्

१-सावर्ण्यभाजा प्रतिमागतानां लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।
यस्यां कपोलैः कलधौतधामस्तम्भेषु भेजे मणिदर्पणश्रीः ॥३-४७

अत्र कलधौतधामस्तम्भेषु कपोलैः मणिदर्पणश्रीर्भेजे इति प्रकृताप्रकृतयोर्मेलनात्सामान्यम् ।

२-निर्धौते सति हरिचन्दने जलौघै-
रापाण्डोर्गतपरभागयाङ्गनायाः ।

अह्नाय स्तनकलशद्वयादुपेये
विच्छेदः सहृदययैव हारयष्ट्या ।८-५१

अत्राङ्गनाया स्तनकलशद्वयाद् सामान्यमलंकारः सावर्ण्यात् ।

३-प्रकटतरमिम मा द्राक्षुरन्या रमण्यः
स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णैः ।
चरणतलसरोजाक्रान्तिसङ्क्रान्तयासौ
वपुषि नखविलेखो लाक्षया रक्षितस्ते ॥११-३२

अत्र नखविलेखस्य लाक्षासावर्ण्यात्तदेकतापत्तेः सामान्यालंकारः ।

४-विशदाश्मकूटघटिताः क्षपाकृत क्षणदासु यत्र च रुचैकतां गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनैस्तमसीव हस्तपरिमर्शसूचिताः ॥१३-५३

अत्र प्रकृताना गुणसाम्यादप्रस्तुतचन्द्रिकैकयात्वया सामान्यालकारः ।

५-मातङ्गाना दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्र. ।
लग्नोऽप्यग्निश्चामरेषु प्रकाम माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥१८-३४

चामरेषु लग्नोऽप्यग्निर्न व्यज्यते इति प्रकृताप्रकृतमेलनात्सामान्यम् ।

---

# तद्गुणः

१-अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ॥१-६

अत्र स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालंकारः ।

२–ककुभिकन्यावक्त्रान्तर्वासलब्धाधिवासया ।
मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥२-२०

अत्र मुखेन स्वगन्धतिरोधानेन मदिराया अत्युत्कृष्टगुणात्तद्गुणालंकारः ।

३–जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥२-२१

अत्र मधुलिड्भिः स्वरूपं त्यक्त्वा शुभ्ररूपग्रहणात्तद्गुणालंकारः ।

४-विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥४-१४

अत्र रथ्यानां स्वगुणत्यागेन गरुडाग्रजगुणग्रहणात्तद्गुणालंकारः ।

५–भातु नाम सुदृशां दशनाङ्कः पाटलो धवलगण्डतलेषु ।
दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥१० ८६

दशनाङ्कः दन्तवाससि गुणोत्कर्षकात्तद्गुणालंकारः ।

६–कनकाङ्गदद्युतिभिरस्य गमितमरुचत्पिशङ्गताम् ।
क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥१५-७

कनकस्यांगदयोः द्युतिभिः बाहुमण्डलस्य पिशंगवर्णस्वीकारात्तद्गुणः ।

७–शितितारकानुमितताम्रनयनमरुणीकृत क्रुधा ।
बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥१५-४८

अत्र नयनयोः स्वधावल्यत्यागेनारुण्यस्वीकारात् तद्गुणः ।

८–अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः ।
रुषारुणीकृतमपि तेन तत्क्षणं निजं वपुः पुनरनयन्निजां रुचिम् ॥१७-४

अत्र वपुषः स्वधावल्यत्यागेन दन्तधावल्यस्वीकारात्तद्गुणालंकारः ।

## अतद्गुणः

१-उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥१०-७६

मणितस्य तिरोधायकशब्दान्तरसद्भावेऽपि ताद्रूप्याऽनापत्तेरतद्गुणोऽलङ्कारः ।

---

## उत्तरम्

१-गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥१-२

अत्र तीरश्चीनमित्यादि उत्तरवचनात् पूर्ववचनोन्नयनमुत्तरम् ।

---

## सूक्ष्मम्

१-पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति ।
अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥९-७६

अत्र प्रियज्ञानन्यार्थस्य लज्जया असमर्थितस्य पुलकैः प्रकाशनात् इङ्गितार्थसूक्ष्मालङ्कारः ।

२-अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ।
कलयन्नपि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥९-८३

अत्र कारणाभावेऽपोऽद्भुतेन क्षुते कृतकत्वस्य सलक्षणैरिङ्गितार्थसूक्ष्मनामालङ्कारः ।

# वक्रोक्तिः

१–असुरस्त्वया न्यवधि कोऽपि मधुरिति कथं प्रतीयते।
दण्डदलितमरधः प्रथमे मधुसूदनस्त्वमिति सूदयन्मधु ॥१५-२३

अत्र मधुना मकरंदस्यमर्दनार्थे प्रसिद्धस्य मधुसूदनशब्दस्य पुष्परसहरणार्थे योजनात् श्लेषवक्रोक्तिरलंकारः।

---

# स्वभावोक्तिः

१–यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव।
निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥३-१६

विशेषचातुर्यबोध्यत्वेन स्वाभाविकरूपवर्णनात् स्वभावोक्ति।

२–श्लिष्यद्भिरन्योन्यमुखाग्रसङ्गस्खलत्खलीनं हरिभिर्विलोलैः।
परस्परोत्पीडितजानुभागा दुःखेन निश्चक्रमुरश्ववाराः ॥३-६६

केवलसहृदयजनसंवेद्यार्थयोः जातिगतस्वभावोक्ति।

३–शनैरनीयन्त रयात्पतन्तो रथाः क्षितिं हस्तिनखादखेदैः।
सयत्नसूताग्यतरश्मिभुग्नग्रीवाग्रसंसक्तयुगैस्तुरंगैः ॥३-६८

वस्तुनोऽसाधारणधर्मवर्णनात् क्रियागतस्वभावोक्तिः।

४–उत्तालतालीवनसंप्रवृत्तसमीरसीमन्तितकेतकीकाः।
आसेदिरे लावणसैन्यधीना चमूचरैः कच्छभुवां प्रदेशाः ॥३-८०

वर्णविषयकजातिगतस्वभावोक्तिः।

५–आरक्षमग्नमवमत्य सृणिं शिताग्र-
मेकः पलायत जवेन कृतार्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभार-
मन्योन्यतः पथि वताविनिताभिभोष्ट्री ॥५-५

विशेषचातुर्यबोध्यत्वेन जातिगतस्वभावोक्तिः ।

६–अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्वाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥५-१५

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिरत्र ।

७–यानाज्जनः परिजनैरवतार्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥५-१७

संस्थानविषयकस्वभावोक्तिरत्र ।

८–यावत्स एव समयः सममेव ताव-
दव्याकुलाः पटमयान्यभितो वितत्य ।
पर्यापतत्क्रयिकलोकमगण्यपण्य-
पूर्णापणा विपणिनो विपणीर्विभेजुः ॥५-२४

वस्तुनोऽसाधारणधर्मवर्णनात् स्वभावोक्तिरत्र ।

९–अल्पप्रयोजनकृतोरुतरप्रयासै-
रुद्गूर्णलोष्टलगुडैः परितोऽनुविद्धम् ।

उद्यानमुद्गतमनोकहजालमध्या-

दन्यः शशं गुणमनल्पमवन्नवाप ॥५-२५

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिरत्र ।

१०-प्रथावि भूमिपतिभिः समुदीतनिद्र-

रदनम् पुरो हरितकं मुदमादधान. ।

ग्रीवाप्रलोलकनकिङ्किणिकानिनाद-

मिश्रं दधद्दशनचर्वुरशब्दमश्वः ।।५-५८

प्रस्तुते स्वाभाविकचारुवर्णनात् स्वभावोक्तिः ।

११-मुक्तास्तृणानि परितः कटकं चरन्त-

स्त्रुट्यद्वितानतनिकाव्यतिपङ्गभाजः ।

सस्रुः सरोपपरिचारकवार्यमाणा

दामाञ्चलस्खलितलोलपदं तुरगाः ।।५-६१

प्रकृतस्य चारुवर्णनात् स्वभावोक्तिः ।

१२-उत्तीर्णभारलघुनाप्यलघूलपौघ-

सौहित्यनि.सहतरेण तरोरधस्तात् ।

रोमन्थमन्थरचलद्गुरुसास्नमासां

चक्रे निमीलदलसेक्षणमौक्षकेण ।।५-६२

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिरत्र ।

१३-विततवलिविभाव्यपाण्डुलेखाकृतपरभागविलीनरोमराजिः ।

कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखबोनावजन्नम् ।।७-२३

विशेषचातुर्यबोधकत्वेन प्रकृतस्य वर्णनात् स्वभावोक्तिरत्र ।

१४–मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।
उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या ॥७-४८

सहृदयजनसंवेद्यप्रस्तुतस्य वर्णनात् स्वभावोक्तिः ।

१५–आयासादलघुनरस्तनैः स्वनद्भिः
श्रान्तानामविकचलोचनारविन्दैः
अम्भस्म कथमपि योषितां समूहै-
स्तैरुर्वीनिहितचलत्पद प्रचेले ॥८-१

स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

१६–आसीना तटभुवि सस्मितेन भर्त्रा
रम्भोरुरवतरितुं सरस्यनिच्छुः ।
धुन्वाना करयुगमीक्षितुं विलासा-
ञ्शीतालुः सलिलगतेन सिच्यते स्म ॥८-१६

रसिकजनसंवेद्यप्रकृतस्य चारुवर्णनात् स्वभावोक्तिः ।

१७–उत्तुङ्गादनिलचलांशुकास्तटान्ता-
च्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।
श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्य-
स्तोयेषु द्रुतनरमङ्गना निपेतुः ॥८-३१

सह्रोक्त्यनुप्राणिना संस्थानविषयकस्वभावोक्तिः ।

१८–प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥११-४

वस्तुनः स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

१६—क्षितितटनयनान्तादुत्थितं दानपङ्क-
प्लुतबहुलशरीरं शाययत्येष भूयः।
मृदुचलदपरान्तोदीरितान्दूनिनादं
गजपतिमधिरोहः पक्षकव्यत्ययेन ॥११-७

प्रस्तुतस्यासाधारणवर्णनात् स्वभावोक्तिरत्र।

२०—अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य काले।
कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री
मुकुलितनयनैवा श्लिष्यति प्राणनाथम् ॥११-६

प्रकृतस्य स्वाभाविकजातिगुणवर्णनात् स्वभावोक्ति.।

२१-परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥११-११

प्रस्तुतस्य चारुवर्णनात् जातिगतस्वभावोक्ति।

२२—उत्क्षिप्तगात्रः स्म विडम्बयन्नभः समुत्पतिष्यन्तमगेन्द्रमुच्चकैः।
आकुञ्चितप्रोहनिरूपितक्रम करेणुरारोहयते निषादिनम् ॥१२-५

उत्प्रेक्षानुप्राणितास्वभावोक्तिरत्र।

२३—स्वैरं कृतास्फालनलालितान् पुरः स्फुरत्तनूर्दर्शितलाघवक्रिया।
वल्गावलग्नैकसवल्गपाणयस्तुरंगमानारुरुहुस्तुरंगिणः ॥१२-६

जातिक्रियागतस्वभावोक्तिरत्र।

२४–महाय सादन्न चकार भूयसे निदेशवानानकदन्धमध्वने ।
तोस्फोत्थितास्तावदचल्लरंहसो विशृङ्खलं शृङ्खलकाः प्रतस्थिरे ॥१२-७

प्रस्तुतस्य यथावद्व्यापारवर्णनात् स्वभावोक्तिः ।

२५–उत्थातुमिच्छन्विधृतः पुरो बलान्निधीयमाने भरभाजि यन्त्रके ।
अर्धोज्झितोद्गारविमिश्रघर्घरस्वरः स्वनाम निन्ये रवणः स्फुटार्थताम् ॥१२-९

वस्तुनः स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

२६–नस्यागृहीतोऽपि धुवन्विषाणयोर्युगं ससूत्कारविवर्तितत्रिकः ।
गोणीं जनेन स्म निधातुमुद्यतामनुक्षणं नोक्षतरः प्रतीच्छति ॥१२-१०

प्रकृतस्य यथावद्वर्णनात् स्वभावोक्तिः ।

२७–ऋज्वीर्दधानैरवलम्ब्य कन्धराश्चलावचूडाः कलघर्घरारवैः ।
भूमिर्महत्यप्यविलम्बितक्रमं क्रमेलकैस्तत्क्षणमेव चिच्छिदे ॥१२-१८

प्रकृतस्य स्वाभाविकक्रियावर्णनात् स्वभावोक्तिरत्र ।

२८–व्यावृत्तवक्त्रैरनिलैस्समूपदं जङ्घिरेव क्षणमीक्षिताननाः ।
दलद्गुरोच- स्तनकम्प्रकञ्चुक मुहुर्मुहुर्गाढिरहोऽवरोधिकाः ॥१२-२०

विशेषचातुर्यबोध्यत्वेन प्रकृतवर्णनात् स्वभावोक्तिरत्र ।

२९–दुर्दान्तमुत्प्लुत्य निरस्तसादिनं सहासहाकारमलोकयज्जनः ।
पर्याणतस्रस्तमुरोविलम्बिनस्तुरङ्गमं प्रद्रुतमेकया दिशा ॥१२-२२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिरत्र ।

३०–त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन गां विलङ्घ्य लघ्वीं करभौ बभञ्जतुः ॥१२-२४

प्रकृतस्य स्वाभाविकगुणक्रियावर्णनात्स्वभावोक्तिरत्र ।

३१–वन्येभदानानिलगन्धदुर्धराः क्षणं तरुच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः कथंचिदारादपथेन निन्यिरे ॥१२-२८

काव्यलिंगानुप्राणिता स्वभावोक्तिरत्र ।

३२–निम्नानि दुःखादवतीर्य सादिभिः सयत्नमाकृष्टकशाः शनैः शनैः ।
उत्तेरुस्तालखुरारवं द्रुताः श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥१२-३१

सुहृज्जनसंवेद्य प्रकृतस्य चारुवर्णनात्स्वभावोक्तिरत्र ।

३३–आगच्छतोऽनूचि गजस्य घण्टयोः स्वनं समाकर्ण्य समाकुलाङ्गनाः ।
दूरादपावर्तितभारवाहणाः पथोऽपसस्रुस्त्वरित चमूचराः ॥१२-३४

प्रकृतस्य स्वाभाविकरूपवर्णनात्स्वभावोक्तिः ।

३४–कोशातकीपुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्बणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं वृतीनामुपरि व्यलोकयन् ॥१२-३७

उपमासंश्लिष्टस्वभावोक्तिरत्र ।

३५–गोष्ठेषु गोष्ठीकृतमण्डलासनान् सनादमुत्थाय मुहुः स वल्गतः ।
ग्राम्यानपश्यत् कपिलां पिपासतः स्वगोत्रसंकीर्तनभावितात्मनः ॥१२-३८

प्रस्तुतयोर्जातिक्रिययोर्यथावद्वस्तुवर्णनात् स्वभावोक्तिः ।

३६–प्रीत्या नियुक्तांल्लिहतीः स्तनन्धयान्निगृह्य पारीमुभयेन जानुनोः ।
वर्धिष्णुधाराध्वनि रोहिणीः पयश्चिरं निदध्यौ दुहतः स गोदुहः ॥१२-४०

प्रकृतस्य यथावच्चारुवर्णनात् स्वभावोक्तिरत्र ।

३७–अन्याजतोऽन्यागतनूर्णतर्णकाश्चिर्यागाद्दत्तस्य पुरो दुधुक्षत ।
वर्गाद्गवां हुंकृतिचारु निर्यतीमरिर्मधोरैक्षत गोमतल्लिकाम् ॥१२-४१

प्रस्तुतस्य स्वाभाविकक्रियारूपवर्णनात् स्वभावोक्तिः ।

३८-दन्ताग्रनिर्भिन्नपयोदमुन्मुखा. शिलोच्चयानारुरुहुर्महीयसः ।
तिर्यक्कटप्लाविमदाम्बुनिम्नगाविपूर्यमाणश्रवणोदरं द्विपाः ॥१२-४३

वस्तुनो वर्णविषयकस्स्वभावोक्तिरत्र ।

३९-शैलाधिरोहाभ्यसनाधिकोद्धुरैः पयोधरैरामलकीवनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे विकासविस्फारितदिङ्नेक्षणा. ॥१२-५१

विशेषणचातुर्यबोध्यत्वेन प्रकृतवर्णनात्स्वभावोक्तिः ।

४०-श्मश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते ।
क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे ॥१२-५४

उपमासंश्लिष्टस्वभावोक्तिरत्र सा च वर्णविषयका ।

४१-प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखैस्तुरङ्गमैरायतकीर्णवालधि ।
उत्कर्णमुद्ग्राहितधीरकन्धरैरवीर्यताग्रे तटदत्तदृष्टिभिः ॥१२-३१

वस्तुनः स्वाभाविकक्रियावर्णनात्स्वभावोक्तिः ।

४२-तीर्त्वा जवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव तां गरीयसीम् ।
शृङ्गैरपस्कीर्णमहत्तटीभुवामसोन्नतोच्चैर्नदितं ककुद्मताम् ॥१२-३४

उपमानुप्राणिता स्वभावोक्तिरत्र ।

४३-शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥१४-२०

वस्तुनोऽसाधारणधर्मवर्णनात् स्वभावोक्तिरत्र ।

४४-इति वाचमुद्धतमुदीर्य सपदि सह वेणुदारिणा ।
सोटरिपुबलभरोऽसहनः स जहास दत्तकरतालमुच्चकैः ॥१५-३९

द्रव्यगतस्वभावोक्तिरत्र ।

४५-प्रणोदिताः परिगतयन्तृकर्मभिर्निषादिभिर्विदितमताङ्कुशक्रियैः ।
गजाः सकृत्करतललालनालिकाहताः मुहुः प्रणदितघण्टमाययुः ॥१७-३५

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात् स्वभावोक्तिरत्र ।

४६-यातैश्चातुर्विध्यमस्त्रादिभेदादभ्यासङ्गैः सौष्ठवाल्लाघवाच्च ।
शिक्षाशक्तिं प्राहरन्दर्शयन्तो मुक्तामुक्तं रायुधं रायुधीयाः ॥१८-११

प्रकृतस्य यथावच्चारुवर्णनात् स्वभावोक्तिः ।

४७-अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः ।
उन्मूर्धानः संनिपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥१८-३२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिः ।

४८-शोचित्वाग्रे भूयसीमूर्त्युभाजोरयैः प्रेम्णा नो तथा वल्लभस्य ।
पूर्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापादाप दाहं यथान्तः ॥१८-५२

सहृदजनसंवेद्यप्रकृतवर्णनात्स्वभावोक्तिरत्र ।

४९-प्रतिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ।
ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवाऽनुकारमुच्चैः ॥२०-११

प्रकृतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्ति ।

५०-पृथुदर्विभृतस्ततः फणीन्द्रा विषमाग्नीभिरनारतं वमन्त ।
अभवन् युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः ॥२०-४२

प्रस्तुतस्य स्वाभाविकक्रियावर्णनात्स्वभावोक्तिरत्र ।

५१-अथ सस्मितवीक्षितादवज्ञाललितं कौस्तुभमितभ्रु माधवेन ।
निजकेतुशिरः श्रितः सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥२०-५२

द्रव्यगतस्वभावोक्तिरत्र सा च वर्णविषयिका ।

५२–ककुभ कृतनादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् ।
उदनसिपुरभ्रमभ्रसंघा सपदि श्यामलिमानमानयन्तः ।।२०-६७

ास्तुन यथावच्चारुवर्णनात्स्वभावोक्ति ।

---

## भावः

१–विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुन स पुरस्त्रियैकतमयैकया दृशा ।।१३-४०

अत्र सहरिः पुरस्त्रिया दृशा पपे इति तात्कालिकविकाराद्भाव ।

२–अधिकोन्नमद्घनपयोधर मुहुः प्रचलत्कलापिकलशाङ्कुरस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचनद्रुतमेककर्णविवरं व्यघट्टयत् ।।१३-४१

अत्र कर्णविवरविघट्टनाद्धरिं प्रति स्वरति दर्शनाद्भावालंकारः ।

३–परिपाटलाब्जदलचारुणासकृच्चलिताङ्गुलीकिसलयेन पाणिना ।
मदिर प्रकम्पमपरा रिपुं मधोरनुदीर्णवर्णनिभृतार्थमाह्वयत् ।।१३-४२

अत्रागक्रियादिषु विलासप्रदर्शनाद्धरिं प्रति रतिविकाराद्भावालंकारः ।

---

## भावशबलम्

१–व्रजत. क्व तात व्रजसीति परिचयगतार्थमस्फुटम् ।
धैर्यमभिनदुदित शिशुना जननीनिर्भर्त्सनविवृद्धमन्युना ।।१५-८७

अत्र दैन्यविषादचिन्ताशङ्कादीनां व्यभिचारिभावानां मेलनात् भावशबलो नामालंकारः ।


उपमा—(II)
एकदेशविवर्तिनी
रशना
माला
साक्षेपा
प्रतिनिर्देशा……एवञ्च सहस्रशः
वाच्या
प्रतीयमाना

- रूपकम्
  - परम्परितम्
    - एकदेशविवर्ति
    - श्लिष्टशब्दनिबन्धनम्
      - केवलम्
      - मालारूपम्
    - अश्लिष्टशब्दनिबन्धनम्
      - केवलम्
      - मालारूपम्
  - साङ्गम्
    - समस्तवस्तुविषयम्
    - एकदेशविवर्ति
  - निरङ्गम्
    - मालारूपकम्
    - केवलरूपकम्

—

- परिणाम
  - तुल्याधिकरणक
  - अतुल्याधिकरणक

—

- सन्देहः
  - भेदानुक्तौ (शुद्धः)
  - भेदोक्तौ
    - निश्चयगर्भ
    - निश्चयान्त

—

- अपह्नुति.
  - भिन्नवाक्या
    - हेत्वा
    - शुद्धा
    - पर्यस्ता
  - एकवाक्या
    - भ्रान्ता
    - छेका
    - कैतवा

## अतिशयोक्ति




कुवलयानन्दकारानुसारेणाष्टविधेयम्—

1–रूपकातिशयोक्ति । 2–भेदकातिशयोक्तिः । 3–सम्बन्धातिशयोक्ति ।
4–असंबंधातिशयोक्ति । 5–अक्रमातिशयोक्ति (कार्यकारणयोः सहत्वे) ।
6–चपलातिशयोक्तिः (कार्यप्रकृष्टत्वे) । 7–अत्यन्तातिशयोक्ति (पौर्वापर्यविपर्यये) ।
8–सापह्नवा ।

---

## तुल्ययोगिता




---

## दीपकम्



सहोक्तिः




---

समासोक्तिः




---

परिकरः




---

अर्थश्लेषः




---

- अप्रस्तुतप्रशंसा
  - सारूप्यनिबन्धना
    - शुद्धसारूप्या
      - वाच्यार्थस्य सम्भवे OR वाच्येऽनध्यारोपे
      - वाच्यार्थस्य असम्भवे OR वाच्य-मध्यारोपे
      - उभय-रूपत्वे OR अंशे-मध्यारोपे
    - श्लेषमूलसारूप्या
      - श्लिष्टविशेषण-विशेष्यनिबन्धना
        - 0सम्भवे
        - 0असम्भवे
        - 0उभयरूपत्वे
      - श्लिष्टविशेषण-निबन्धना
        - 0सम्भवे
        - 0असम्भवे
        - 0उभयरूपत्वे
  - कार्यकारणभावनिबन्धना
    - प्रस्तुतकार्येऽ-प्रस्तुतकारणम्
    - प्रस्तुतकारणेऽ-प्रस्तुतकार्यम्
  - सामान्यविशेषभावनिबन्धना
    - प्रस्तुतसामान्येऽ-प्रस्तुतविशेषः
    - प्रस्तुतविशेषे-प्रस्तुतसामान्यम्

(0=वाच्यार्थस्य)

व्याजस्तुतिः

- स्तुतिनर्यवसायिनीनिन्दा
- निन्दानर्यवसायिनीस्तुति

—

आक्षेपः

- उक्तविषयी
  - वस्तुकथननिषेध
  - वस्तुनिषेध
- वक्ष्यमाणविषयी
  - वक्ष्यमाणविशेषे निषेध
  - अंशे निषेध

—

## विरोधाभास.

1–जात्या सह जातेर्विरोधः।
2–जात्या सह गुणस्य विरोध ।
3–जात्या सह क्रियायाः विरोध ।
4–जात्या सह द्रव्यस्य विरोध ।
5–गुणेन सह गुणस्य विरोध ।
6–गुणेन सह क्रियाया विरोध ।
7–गुणेन सह द्रव्यस्य विरोधः ।
8–क्रियया सह क्रियाया विरोध. ।
9–क्रियया सह द्रव्यस्य विरोधः ।
10–द्रव्येण सह द्रव्यस्य विरोधः ।


विभावना
शाब्दी
आर्थी
हेतो प्रतिषेधे
हेतोर्वैकल्ये
हेतो सप्रतिबन्धकत्वे
हेत्वन्त-
रोपादाने
विरुद्ध-
हेतूपादाने
हेतु-
कार्यविपर्यये

---


विशेषोक्तिः
उक्तनिमित्ता
अनुक्तनिमित्ता
चिन्त्यनिमित्ता
अचिन्त्यनिमित्ता

---


विषमम्
अतिविरूपयो
सश्लेषे
कर्तुः क्रियाफलान-
वाप्तौ अनर्थप्राप्तौ च
कार्यकारण-
धर्मविरोधे
गुणविरोधे
क्रियाविरोधे

---

**अधिकम्**

- आधाराधिक्ये
- आधेयाधिक्ये

---

**अन्योन्यम्**

- गुणाधानम्
  - उत्कर्षावहम्
  - अपकर्षावहम्
- क्रियाधानम्
  - उत्कर्षावहम्
  - अपकर्षावहम्

---

**विशेषः**

- अनाधाराधेये
- एकस्यानेकविषयत्वे
- अशक्येतरकरणे

---

**समम्**

- सद्योगे
- असद्योगे
  - शुद्धम्
  - व्याजस्तुतिपर्यवसायिन्


एकावली
उत्तरोत्तरस्य विशेषणत्वे
पूर्वपूर्वस्य विशेषणत्वे
स्थापने
अपोहने
स्थापने
अपोहने


काव्यलिंगम्
पदार्थगतम्
वाक्यार्थगतम्
एकपदार्थगतम्
अनेकपदार्थगतम्


पर्यायः
एकस्य वस्तुनः अनेकस्मिन् स्थाने
अनेकस्य वस्तुनः एकस्मिन् स्थाने
एकस्य वस्तुनः अनेकस्मिन् विधाने
अनेकस्य वस्तुनः एकस्मिन् विधाने

परिवृत्तिः




परिसंख्या




अर्थापत्तिः



- समुच्चयः
  - समानाधिकरणे
    - गुणयोः यौगपद्ये
    - क्रियया: यौगपद्ये
    - गुणक्रिया-यौगपद्ये
  - वैयधिकरण्ये
    - गुणयौगपद्ये
    - क्रिया-यौगपद्ये
    - उभय-यौगपद्ये

---

- समाधिः
  - अनायासनिष्पत्तौ
  - साङ्गनिष्पत्तौ

---

- प्रत्यनीकम्
  - साक्षात्सम्बन्धे
  - परंपरासम्बन्धे

---

- प्रतीपम्
  - उपमानस्योपमेयत्वे
  - उपमानस्य निष्फलत्वे

- मीलितम्
  - स्वाभाविकम्
  - औपाधिकम्

---

- उत्तरम्
  - उन्नेयप्रश्ने
  - निबद्धप्रश्ने

---

- सूक्ष्मम्
  - आकारादर्थज्ञाते
  - इंगितादर्थज्ञाते


स्वभावोक्ति
क्रियावर्णने
रूपवर्णने
उभयवर्णने
वर्णविषयिका
अवयव-
सन्निवेशा
उभयविषयिका

---


उदात्तम्
अलौकिकसम्पत्तिवर्णनम्
प्रकृतवर्णनीयसंपादनम्

---

# वर्णानुक्रमणिका

८–अर्थश्लेष —द्वितीयसर्ग –११७ तृतीयसर्ग –५७ पञ्चमसर्ग –४. द्वादशसर्ग –८ षोडशसर्ग –७ ९ १२ १३ (८)

९–अर्थान्तरन्यास –प्रथमसर्ग –१४ १७ २९ ६७ ७२ ७३ द्वितीयसर्ग –१२ १३ ३५ ३७ ३८ ४० ५१ ६५ ८० ८५ १००. तृतीयसर्ग –३१. चतुर्थसर्ग –१७ पञ्चमसर्ग –६ १४ १९ ३७ ४१ ४२ ४४ ४७ षष्ठसर्ग –४३ ४५ ६३ सप्तमसर्ग –१ २७ ३८ ४३ ५० ५२ ६१ ६८ अष्टमसर्ग –७ १० १२ १८ २० २२ २८ ४५ ५४ ५५ ५७ ५८ ६० ६९. नवमसर्ग –५ ६ १२ १६ २३ २९ ३३ ४२ ४८ ५१ ५७ ६२ ६८ ६९ दशमसर्ग –५ १८ २१ २८ ३५ ७९ एकादशसर्ग –२५ ३३ ३५ ५७ ५९ ६४ द्वादशसर्ग –२२ ५२ त्रयोदशसर्ग –६ १७ ६८ पञ्चदशसर्ग –१ ४० ४१ ४३ ८९. षोडशसर्ग –४१ ४४ ४९. सप्तदशसर्ग –५० ५९ अष्टादशसर्ग –२३ ६४ ६६. एकोनविंशसर्ग –११९ विंशसर्ग –७४ (९८)

१०–अर्थापत्ति —प्रथमसर्ग –३५ ३६ ३८ द्वितीयसर्ग –४३ चतुर्थसर्ग –१९. ३९ ५७ पञ्चमसर्ग –४७ षष्ठसर्ग –१६ ३९ ६५ सप्तमसर्ग –६८ अष्टमसर्ग –५० नवमसर्ग –५७. दशमसर्ग –९. पञ्चदशसर्ग –४०. षोडशसर्ग ५९. (१७)

११–असङ्गति —दशमसर्ग ४६

१२–आक्षेप – पञ्चदशसर्ग –८३

१३–उत्तरम् —प्रथमसर्ग –२

१४–उत्प्रेक्षा —प्रथमसर्ग –७ ८ ९ १५ २१ २२ ४९ ५७ ६० ७० ७५ द्वितीयसर्ग –४ ७ ३२ ६७ तृतीयसर्ग ५ ६ ७ ९ १० १५ १८ २९ ३३ ३४ ३५ ३९ ४० ४१ ४२ ४३ ४६ ४९ ५५ ६९ ७० ७१ ७२ ७३ ७७ ७८ चतुर्थसर्ग –१ २ ४ ७ २५ ३२ ३५ ४२ ४३ ४६ ४७ ५० ५८ ६८ पञ्चमसर्ग –२ ३ ९ ११ १६ १९ २० २७ ३० ३१ ३२ ३८ ५२ ६९. षष्ठसर्ग –५ ६ ७ ८ १२ १९ ३४ ३६ ३९ ४२ ४४ ४५ ५० ५१ ५२ ५३ ५४ ५८ ५९ ६२ ६४ ६५ ६६

६७ ६९ ७० ७८ ७९ सप्तमसर्ग–१३ २५ २६ २८ ३०
४२ ५५ ५८ ६० ६२ ६४ ६५ अष्टमसर्ग–३ ४ ८ १४ १५
१६ २७ ३३ ३४ ३५ ४० ४२ ४८ ४९ ५० ५१ ५३ ६०
६२ ६३ ६६ ७१. नवमसर्ग–८ १५ १७ १८ २२ २५ २६
२८ ३० ३४ ३९ ४० ४२ ४९ ६३ ६४ ६६ ७० ७१ ७२
८० ८४. दशमसर्ग–२ ६ ७ ९ ११ १४ ३० ३४ ४५ ४६
४८ ४९ ५० ७४ ७५ ७७ ८४ ८५ ९१ एकादशसर्ग–१२
१६ १८ २२ २४ ३० ३१ ३८ ४३ ४४ ४५ ४६ ४९ ५१
५३ ६० ६१ ६२ ६३ द्वादशसर्ग–५ १७ १९ ४३ ५० ६३
६४ ६६ ७० ७१ ७५ ७६ त्रयोदशसर्गः–२ ११ १२ २५
२६ ३० ३६ ३७ ३९ ४५ ४६ ४७ ५१ ५७ ६७ चतुर्दश-
सर्ग.–१ २५ २८ ७६ ७७ पञ्चदशसर्ग–३ ७ ८ ४७ ४९
५१ ५६ ७८ ७९ ८६ ९० ९४ सप्तदशसर्ग–३ ५ ९ १०
१४ १६ २६ ३१ ३२ ३६ ४१ ४९ ५५ ५८ ६० ६५ ६८.
अष्टादशसर्ग–१ ५ ७ ८ १० २४ ४१ ४३ ४४ ४८ ५४ ६३
६७ ६८ ६९ ७३ ७५ ७८ ७९. एकोनविंशसर्ग–२४ २८ ६८
७० ७१ ८१ ८५ १०० ११० ११६ ११७ विंशसर्ग–४ ६
८ १४ १६ २० २८ ४५ ४८ ६४ ६८ ६९ ७० (२१५)

१५–उदात्त — चतुर्थसर्ग–६० एकादशसर्ग-३६ त्रयोदशसर्ग–५० ५८ ५९
विंशसर्ग–९९ ८४ (७)

१६–उपमा— प्रथमसर्ग-४ ५ ६ ७ ८ १२ १५ १६ १९ २० २१ २२ २४
२५ २८ ३९ ५३ ५४ ७२ ७५ द्वितीयसर्ग–५ ७ १० १४
१८ २५ २८ ३१ ३९ ४७ ५० ५५ ५८ ५९ ६१ ६४ ६९
७२ ७४ ७८ ८१ ८४ ८६ ८७ ८८ ९० ९१ ९२ ९५ ९६
९७ ९९ ११० ११६ तृतीयसर्ग —१ २ ४ ११ १७ २० २२
२४ २६ ३५ ३६ ३७ ४८ ४९ ५९ ६२ ६३ ६४ ६५ ६७
७० ७१ ७५ चतुर्थसर्ग–५ ८ ११ १३ १४ २१ २३ २४
२८ ३० ३१ ३५ ३७ ५१ ५९ ६५ ६७ ६८ पञ्चमसर्ग -
१ ३ ४ ८ ११ १२ १३ १६ २९ ३५ ३६ ४५ ५५ ५६ ५७
६६ ६८. षष्ठसर्ग -४ ८ ९ १२ २३ २७ २८ ३४ ३५ ३६
३७ ४६ ४८ ५१ ६४ ७१ ७२ ७३ ७५ सप्तमसर्ग –

२३ ४६ ४७ ६६ ७३ अष्टमसर्ग –९ २८ ४९ नवमसर्ग.–
८ ९ १९ २८ ३० ३२ ३६ ३९ ५२ ५५ दशमसर्ग.–१ १३
१५ २५ ६४ ८१ ८७ एकादशसर्ग –३ ६ ८ १४ ३९ ४०
४२ ४५ ४९ ५४ ५५ ५६ ५८ ६२ ६५ ६६. द्वादशसर्ग –२
४ ११ १४ २५ ३७ ४८ ५४ ५५ ६८ ६९ ७० ७४ ७५.
त्रयोदशसर्ग –५ १५ १८ १९ २० २१ २२ २३ २४ २५ २७
२८ २९ ३३ ३७ ३८ ४१ ४२ ५२ ६१ ६५ चतुर्दशसर्ग –
७ १९ २४ ४४ ५० ५२ ७६ ७७ ८४ ८५. पञ्चदशसर्ग –
२ ४ ५ ६ ९ १० १३ १५ २० ३३ ३४ ३५ ४४ ४८ ५०
५१ ५२ ५५ ५८ ६२ ६९ ७३ ७४ ७५ ८० ८६ ९० ९२
९६. षोडशसर्ग –५ १० १२ १८ १९ २४ ३२ ३७ ४३ ५०
५२ ५३ ५८ ६४ ६५ ७२ ८० सप्तदशसर्ग –१ २ ७ १३ १७
१९ २१ २५ २९ ३८ ४३ ४४ ४६ ४८ ५२ ५६ ६७.
अष्टादशसर्ग –१ २ ४ ६ ९ १२ २० २५ ३१ ३४ ३५ ३६
३८ ४० ४१ ४२ ४३ ५० ५१ ५७ ५९ ७१ ७२ ८०.
एकोनविंशसर्ग –१ २ ३ ४ ६ ७ १० ११ १२ २२ २५ २६
४१ ४३ ४५ ४७ ५२ ५३ ५८ ६१ ६४ ६५ ६६ ६९ ७४
७५ ७६ ७९ ८३ ९३ ९८ १०० १०४ १११ ११६
विंशसर्ग –३ ५ ११ १२ १३ १७ १८ १९ २१ २२ २३ २४
२५ २७ ३० ३१ ३३ ३५ ३८ ४१ ४३ ४४ ४५ ४६ ४७
४९ ५१ ५३ ५४ ५७ ५९ ६० ६१ ६२ ७१ ७३ ७६ ८१.
(३७७)

१७–उपमेयोपमा —एकादशसर्ग.–१५. त्रयोदशसर्ग –४. (२)

१८–ऊर्जस्वी —एकादशसर्ग –२६.

१९–एकावली —सप्तमसर्ग–३ दशमसर्ग. ३३ (२)

२०–काव्यलिङ्गम् —प्रथमसर्ग –३ २४ २६ ३५ ४१ ६१ ७१. द्वितीयसर्ग.–४ ६
३२ १०२ १०७ ११५. तृतीयसर्ग –१९ २३ ३२ ५२ ५९ ६१
७९ ८१. चतुर्थसर्ग –१ ५ १५ १७ २२ ४४ पञ्चमसर्ग.–
५ १७ १८ २२ २३ २६. षष्ठसर्ग –३८ ४७ ६१. सप्तमसर्ग –
२० २८ ५५ ६३ ७५. अष्टमसर्ग.–११ १९ ३२ ३७ ४३
५० ५९ ६९ ७०. नवमसर्ग–१३ २१ ५९. दशमसर्ग–

३ २३ ६१ ६६ ७३ ८३ ८४ ८८ ६०. एकादशसर्ग –२ ५ १५ २३ ३४ ३६ ५४ ५५. द्वादशसर्ग –१ २४ २६ २८ २६ ४२ ४४ ५३ ६१ ६२ ६५ ७३ त्रयोदशसर्ग –३ २६ ४८ चतुर्दशसर्ग –४ १५ २३ २४ २६ २७ २६ ३१ ३२ ३५ ३८ ५१ ५७ ५६ ६१ ६२ ७६ ८२ ८७ पञ्चदशसर्ग –६ ११ १४ १८ १६ २१ २२ २३ ३१ ३६ ३७ ३८ ४१ ४२ ४५ ५३ ५५ ५७ ५६ ६८ ७० ७७ ७८ ८१ ८५ ६३ ६५ ६६ षोडशसर्ग –४५ ५२ ५४ ८५ सप्तदशसर्ग –६ ३३ ३४ ५३ ६२ ६६ ६८ अष्टादशसर्ग –३ १३ १६ १७ २० २१ ३४ ३७ ५६ ५८ ६१. एकोनविंशसर्ग –१६ २१ ३१ ३५ ३८ ५३ ५७ ५८ ७८ ८० ६७ ६६ १०१. विंशसर्ग –१ ७ ३२ ३४ ३६ ३७ ३६ ६३ (१७५)

२१–तद्गुण —प्रथमसर्ग –६. द्वितीयसर्ग.–२० २१. चतुर्थसर्गः–१४ दशमसर्ग –८६. पञ्चदशसर्ग –७ ४८. सप्तदशसर्ग –४. (८)

२२–तुल्ययोगिता —प्रथमसर्ग –३ ४५ ५२. द्वितीयसर्ग –२४ ३६ ४६ १०१. तृतीयसर्ग.–५३ ५४ ५७ ६० चतुर्थसर्ग –१६ २७ ३८ ४०. पञ्चमसर्गः–६. षष्ठसर्ग –४३ ७६ सप्तमसर्ग –५६ अष्टमसर्ग.–३० ५२ नवमसर्ग.–२४ ४१ ५३. दशमसर्ग –४ ८ १३ ३६ ६६, ७१ ७५ एकादशसर्ग –१५ ६४ द्वादशसर्ग.–३५ ४५ ४६ त्रयोदशसर्ग –४. चतुर्दशसर्ग –३२ ४६ ५५ ५६ ८३ ८६. पञ्चदशसर्ग –८२ षोडशसर्ग –४६ ६४ सप्तदशसर्ग – २२ ६५ अष्टादशसर्ग.–२ ६ ३३ ५५ ६२ एकोनविंशसर्ग – १८ ३२ ६२ ६५ ६७ १०३ ११३ ११४ विंशसर्ग –१५. (६२)

२३–दीपकम् —प्रथमसर्ग –५१. द्वितीयसर्ग –१०६ (२)

२४–दृष्टान्त. —द्वितीयसर्ग –२३ ३४ ६२ ७० ८३. चतुर्दशसर्ग – ८ १३ ४६ पञ्चदशसर्ग –१७ सप्तदशसर्ग –१८ ४० विंशसर्ग –४०.(१२)

२५–निदर्शना —प्रथमसर्ग –१६ ७५. द्वितीयसर्ग.–२ १६ ३१ ४२ ६६ तृतीयसर्ग – ३ ४७ चतुर्थसर्ग –१३ २० २६ २८ ३१ ४४ ५२ ५६ ६५ ६८. पञ्चमसर्ग –२ ४६. षष्ठसर्ग –२१. सप्तमसर्ग –

५१–व्यतिरेक —प्रथमसर्ग.–२ २७ द्वितीयसर्ग.–४६ ४८. तृतीयसर्ग –८२. चतुर्थसर्ग –६४ सप्तमसर्ग –३६. एकादशसर्ग –२७ २८. चतुर्दशसर्ग –२ ३ ४३ ६५ ६६ अष्टादशसर्ग –३३ ७०. एकोनविंशसर्ग –१८ ५२. विंशसर्ग.–७७. (१६)

५२–व्याजस्तुति — प्रथमसर्ग –३६. द्वितीयसर्ग.–७० (२)

५३–सन्देह —प्रथमसर्ग –२. अष्टमसर्ग. २६ नवमसर्ग.–१६ २० दशमसर्ग. १४ २४. अष्टादशसर्ग –४२. (७)

५४–समम् — सप्तमसर्ग –५३.

५५–समाधि - षष्ठसर्ग. ४६. दशमसर्ग.–२०. (२)

५६–समासोक्ति —प्रथमसर्ग –४४ ५८ ६४. द्वितीयसर्ग –५२ तृतीयसर्ग –१५ २८ ४१ ६६ चतुर्थसर्ग.–१६ २६ ३४ ४७ पञ्चमसर्ग.–३ ४३ ५४. षष्ठसर्ग –२५. सप्तमसर्ग –२६ अष्टमसर्ग –२ २६. नवमसर्ग.–७ १० ३६ दशमसर्ग –३८ ४० ५१ ६८ ७२ एकादशसर्ग –१४ २२ ४८ ६१ ६२ पञ्चदशसर्ग –६ षोडशसर्ग –६२. सप्तदशसर्ग –२४ ३७ ३८ ३६. अष्टादशसर्ग - १४ १६. एकोनविंशसर्ग.–३५ ८५ ८१. विंशसर्ग –६ ९ १० २४ ७२. (४८)

५७–समुच्चय —षष्ठसर्ग –७२ चतुर्दशसर्ग –३१. पञ्चदशसर्ग.–६१. अष्टादश-सर्ग –७३. (४)

५८–सहोक्ति —अष्टमसर्ग –३१ चतुर्दशसर्ग –३७ षोडशसर्ग –६३. अष्टा-दशसर्ग — ३६. (४)

५६–सामान्यम् —तृतीयसर्ग.–४७ अष्टमसर्ग –५१ एकादशसर्ग.–२२. त्रयोदश-सर्ग - ५३ अष्टादशसर्ग –३४. (५)

६०–सूक्ष्मम् —नवमसर्ग –७६ ८३. (२)

६१–स्मरणम् —अष्टमसर्ग –६४

६२–स्वभावोक्ति —तृतीयसर्ग.–१६ ६६ ६८ ८०. पञ्चमसर्ग –५ १५ १७ २४ २५ ५८ ६१ ६२. सप्तमसर्ग – ३३ ४८. अष्टमसर्ग –१ १६ ३१. एकादशसर्ग. ४ ७ ९ ११. द्वादशसर्ग –५ ६ ७ ९ १० १८ २० २२ २४ २८ ३१ ३४ ३७ ३८ ४० ४१ ४७ ५१ ५४ ७३ ७४. चतुर्दशसर्ग –२० पञ्चदशसर्ग:–३६ सप्तदशसर्ग.– ३५. अष्टादशसर्ग.–११ ३२ ५२. विंशसर्ग.–१६ ४२ ५२ ६७ (५२)